सौजन्यं किल कीर्तितं कविवरैर्योषित्कृपा-बाधकं
मन्यन्ते बहु कैतवं मृगदृशस्त्वेतादृशं यन्मतम् ।
तत्सूक्तं सुविचार-शील-महिला-मोहाय शाठ्यं न किं ?
किं वाणी न तथा सृजन्ति कवयः स्त्र्याकर्षणाऽपेक्षणीम् ? ।।56।।

लोगों को मिलती नहीं सुजनता से कामिनी की कृपा,
देती हैं मृगलोचनी कितवता को मान, त्यागे त्रपा ।
क्या ऐसा कहना न शाठ्य, महिला को मोहने के लिये ?
क्या ऐसी कविता न बाट युवती की जोहने के लिये? ॥56॥

Good souls can not win women, poets say,
Girls love impertinence, it is their way.
Is not this strain an insolence to girls ?
**Don't poets grow so saucy charming churls ?56.**

स्वार्थाऽऽसक्तिरियं परा भगवती लोके समुद्भासते
सत्यं किंचन कर्म नैव विदुषा निःस्वार्थमारभ्यते ।
आनन्दो यदि सङ्गतोऽक्षविषयैर्नैवाऽभविष्यत्तदा
को वा नाम जडोऽकरिष्यदपि तं सन्तानहेतोः श्रमम् ? ॥57॥

स्वार्थासक्ति, भला, भली भगवती संसार में राजती,
कोई काम यहाँ न लोग करते, ज्ञानी, बिना स्वार्थ के ।
भोगों के यदि संग में तनिक भी आनन्द आता न तो
कोई क्यों करता परिश्रम वही सन्तान के भी लिये ? ॥57॥

By selfishness the universe is won
Without self-int'rest, nothing is here done.
If pleasure had not been, with sense, allied,
For mere child birth, what dunce would ride his bride? 57.

सद्ध्यो भिन्नपदं कदापि मनुजो मार्गं समालम्बते
सत्साध्यानि सुसाधयन्नपि कदाऽप्यापादयेद्विक्रियाम् ।
नैराश्यं तनुते पुनर्विजयते वीरेषु वर्यो भवन्
सत्त्वोत्कर्ष-विराजितेषु बहुधा वैचित्र्यमालक्ष्यते ॥58॥

ऐसे भी पथ को कभी पकड़ता जो सज्जनों का नहीं,
साध्यों को सध साधता सुविधि से, व्याघात ला दे कभी ।
हो वीताश कभी, कभी विजय को, सद्वीर हो, चूमता,
सत्त्वोत्कृष्ट मनुष्य में पनपता वैचित्र्य देखा गया ॥58॥

Sometimes, engaged in desecrating deeds,
Set well, at will, cause self-cause-losing leads,
Now hopeless, then brave, they fulfil their ends:
Prodigious persons take eccentric stands. 58.

दर्शं दर्शमनेकधाऽपि तृषितः सम्भाव्य नैजं जनं
सीदन्तं समुपस्थितं सकृदपि द्रष्टुं पुनर्दर्शकम् ।
सद्यःस्तब्ध-कनीनिकोऽवनिगतो नूनं प्रयाण-क्षणे
वाञ्छत्यन्तक-वाञ्छितोऽपि जरठो भूयः स्वदेह-स्थितिम् ॥59॥

वारंवार निहार भी स्वजन को सन्तृप्त ना चित्त में,
चारों ओर विलाप-लीन कुल के आँसू ढले, गाहता ।
आँखों की पुतली लिये ठहरती, पृथ्वी पड़ा अन्त में,
चाहा अन्तक का, सुजीर्ण जन भी, जीना अभी चाहता ॥59॥

With constant looks at kinsfolk, gathered round,
Lamenting with the high pathetic sound,
Just laid on ground, his eye-balls stayed with strife,
The old man still longs for his longer life. 59.

श्री-सम्पूर्ण-सुवर्ण-सत्त्व-ललिता, लावण्यपूर्णानना,
पीनोत्तुङ्गपयोधराधरसुधाधाराधराधामिनी ।
स्त्री-रत्नोत्तम-सङ्गमाऽर्चित-धियं श्री-मन्त्र-तन्त्र-प्रियं
या मां मोदयते मदन्तरगता कस्यैचिदस्यै नमः ॥60॥

श्री-सम्पूर्ण-सुवर्ण-सत्त्व-ललिता, लावण्यपूर्णानना,
पीनोत्तुङ्गपयोधराधरसुधाधाराधराधामिनी ।
स्त्री-रत्नोत्तम-सङ्गमार्चित घने श्री-मन्त्र-तन्त्रों तने
मेरे चित्त चढ़ी किसी युवति को मेरा नमस्कार है ॥60॥

I greet the girl of grace, with lovely face,
With lofty breast and lips of nectar-trace —
The best of maids, set in my mystic heart,
Adored by first-rate ladies, pure and smart.60

वक्षो-नेत्र-नितम्ब-नीत-नयनो नीवी-नताऽक्षः सुहृ -
न्नेकान्ते नव-यौवनाभिरनिशं रम्याः कथा मा कृथाः ।
भोगोत्कण्ठि विलास-वस्तु नवला नारी न जाने कदा
कस्यां कुत्र कथं कुबुद्धि-चलितं माद्येद्धि मुग्धं मनः ॥61॥

नीवी, नेत्र निहारता न बतरा, एकान्त में, तू सखे!
ज्वानी में परदार से महकती सी रम्य बातें कभी ।
भोगोत्कण्ठित, भोगवस्तु, जग में, होतीं नई नारियाँ,
ना जाने किसको लगे मचलने, होके हिया बावला ॥61॥

No discourse, friend, with youthful ladies, lone,
Affecting luring looks and charming tone.
Love-blown, sense-pleasure-prone is womankind.
Who knows where, why, how, who might move your mind ? 61.

ज्योत्स्ना व्याप्य गताऽथ भानुरुदितोऽप्यस्ताचलं प्रस्थितः
किं किं नास्ति जगत्यपार-करुणे वैराग्य-सन्दीपनम् ?
एवं सत्यपि यौवने नृषु मनो-मोदं समाऽऽकारणी
नारी-सुन्दरता हि सा विजयते संसार-संसारणी ॥62॥

ज्योत्स्नाऽनन्तर सूर्य भी उदित होकर अस्त होने चला,
क्या-क्या दृश्य न विश्व में भर रहा वैराग्य की भावना ?
तो भी यौवन में, मनुष्य-मन में, जो मोद लाती रहे,
नारी-सुन्दरता बड़ी बल-वती संसार-संसारणी ॥62॥

The moon-light fades, the bright sun goes to set
Ascetic thoughts, what's that that does not whet
In spite of that, by beauties men are lulled:
'Tis handsome women's grace that wields the world. 62.

विश्रम्भा भुवि शाश्वता न सकलाः केचिद्युगाऽपेक्षया
पर्याप्तं प्रथितास्तथाऽपि गलिताः कालान्तरे कीलिताः ।
अस्मत्काल-विकल्पितं कलियुगे लोके प्रवृत्तं मतं
को जानाति कियद्दिनानि जनता-सम्मान्यतामेष्यति ? ॥63॥

आस्थाएँ न सभी अनन्त, जग में, सत्ता किन्हीं की कभी
कालाऽपेक्षित हो चली, मिट गई, कीली किसी काल में ।
लोगों ने अपना रखी, चलन की, चालू प्रथा, आज जो
ना जाने, कितने दिनों तक, जनों की मान्यता पा सके ? ॥63॥

All trusts are not eternal, some of them
Came out but which then men had to condemn.
So many ways of life men have today.
**Who is sure when they will reach their decay?63.**

## वृथा-वार्ता हि मा कृथाः

जानात्येव निजेप्सितं सफलता-सौख्यं च सर्वो जनः
साफल्यं कथमाप्यमत्र सुजनैः प्रश्नोऽयमेवाखिलः ।
सौभाग्योदय-कारकं यदि किमप्याऽऽवेद्यमेतन्मुदा
वेद्यं तत्क्षणमन्यथा हि मुखरा मौनं भजध्वं बुधाः ॥64॥

स्वार्थो को सब जानते, सफलता का सौख्य भी ज्ञात है,
कैसे सज्जन विश्व में सफल हो, सारी समस्या यही
सौभाग्योदय का उपाय यदि हो तो बोल दो प्रेम से,
ना हो तो फिर व्यर्थ बात तज के, मौनी बनो पण्डितो! ॥64॥

All know their aims and pleasures of success,
The problem is there how to make access.
If you do know some fortune-forming-feats,
Please speak or you had better stop your bleats. 64.

ये चाऽप्यत्र निरन्तरं रसमयीं कुर्वन्ति भोगस्तुतिं
चित्रं ते निज-यौवनेऽपि भवितुं शक्याः पराः संयताः ।
कामं दर्शित-संयमा अपि परे दृष्टा भुजङ्गाः जना
बाह्याचारमवेक्ष्य केवलमहो! कःकं दिशेत्कीदृशम् ? ॥65॥

वाणी से करते सदा रमण के आनन्द की वन्दना
जो, वे यौवन में विचित्र ढँग से देखे बड़े संयमी ।
ऐसे भी कुछ जो प्रदर्शन करें वैराग्य का, जार हो,
बाह्याचार विचार, कौन किसका आचार कैसा कहे? ॥65॥

The men who often praise the joys of sense
Could, strangly, prove, in youth, restrained, intense
While others, chaste outside, are hidden lewd.
Through outward shows, who could be rightly viewed ?65.

## असद्भिर्महिमा सताम्

एके सन्ति विदूषका हि महतां वृत्ताऽनुदत्तैः पदै-

राचारं किल नाटयन्ति कृपणाः कीर्त्युत्सुकाः केवलम् ।

सद्व्याहार-विडम्बनादि-विविध-व्यापार-मग्ना मुधा

माहात्म्यं प्रतिपादयन्ति कपटाचारैरसन्तः सताम् ।।66।।

ऐसे भी जन जो महापुरुष के सारे सदाचार का

लीला-नाटक सा किये फिर रहे हैं, नाम के ही लिये।

सद्व्याहार-विडम्बनादि करने में व्यर्थ ही मग्न वे

सन्तों का, खल, सत्त्व सिद्ध करते जाते छलाचार से ।।66।।

The apes of great men play the feigning game.
They take vain strides,aspiring for the fame.
Pretending great men's works and words and gait
Impostors prove the greatness of the great. 66.

## माहात्म्यं प्रकृतौ स्थितम्

बाल्यादेव निवारयन्नवरतां साधुः समुज्जृम्भते
नाकाशे समकालमेव तमसा सूर्यस्तनोति प्रभाम् ।
कार्पण्यं प्रतिपालयन्नहि महासत्त्वैः समुद्घूयते
चारित्रेण निसर्गतो हि महतां श्रेण्यो विभक्ता इव ॥67॥

जीता है, बचता हुआ अवरता से, साधु आरम्भ से,
फैलाता नभ में न साथ तम के ही, धूप को, सूर्य भी ।
देते भी न महाबली कृपणता का साथ देखे गये,
होती सिद्ध निसर्ग से अलग सी श्रेणी बडों की यहाँ ॥67॥

The sages rise, bereft of evil ways.
The sun does not, with darkness, dart its rays.
The saints don't roar, supporting stinginess.
**Great men are known by Virtue's plain excess. 67.**

काचिद्धेनुरियं विचुम्ब्य सलिलं पात्राच्छनैर्दर्शितात्
'हीयो प्वुच्'- परिपूजितैः सुवचनैः सुस्नेह-निस्यन्दिभिः ।
भूयः पार्श्व-विनीत-पुच्छ-वदना किं नाम दंशभ्रमा -
त्प्रातर्गोप-सुरक्षिताऽऽत्म-निलयाद्धीरं वनं गच्छति ।।68।।

देखो तो, मुँह डाल धेनु जल में, आगे रखे पात्र के,
'हीयो प्वुच्'- सम रम्य बोल सुनती, बोले गये स्नेह से।
डाँसों के डर से स्व-पुच्छ-मुख को लेती पुनः पार्श्व में,
प्रातःकाल गुपाल के खिरक से धीरे चली हार को ।।68।।

Just sipping from the water-pot, nigh-brought,
With the words 'Hīyo puc', affection-wrought,
**With mouth and tail, for gnats, attempting blows,**
**Some cow, at morn, to meadows, calmly, goes.68.**

## वरे शापे यतो भव

त्यक्त्वा शाप-वर-प्रयोगमट रे! प्रायस्तपस्विन्! सखे!
नाऽत्यन्तं भुवि वर्तते किमपि ते कोप-प्रसादास्पदम् ।
शत्रुत्वं नहि नित्यमस्ति परमो वैरी हितैषी भवे -
न्मित्रं चापि भवेदरि: किमथवा हेतूद्भवा भावना ॥69॥

शापों की, वरदान की प्रकृति को, प्राय:, सखे! छोड़ तू,
तेरा क्रोध-प्रसाद-पात्र, जग में, है नित्य कोई नहीं ।
देखी शाश्वत शत्रुता न, बनता वैरी हितैषी कभी,
होता कारण-जात भाव जन में, हाँ, मित्र वैरी बने ॥69॥

O! mystic friend ! refrain from banes or boons.
Avoid your constant rage or pleasure-tunes.
One's foes and friends are never absolute.
Foes turn friends: spirits, reasons execute. 69.

## गेह-शोभा पतिव्रता

विद्या-वित्त-विवर्जिता अपि नरा नार्यो न साधारणा -

स्तत्र श्रीशिव-शक्ति-भक्ति-तपसां तेजो विराजेत चेत् ।

कार्याऽकार्य-विचारणा-परतया तापेऽपि सन्तोषिणां

पातिव्रत्य-परायणा हि रमणी गेहे सतां शोभते ।।70।।

विद्या-वित्त-विहीन भी नर-नरी को तुच्छ ना मान लो

जो होवे शिव-शक्ति-भक्ति-तप की तेजस्विता की छटा ।

कार्याऽकार्य-विवेक-जन्य-विपदा-सन्ताप भी झेलता

सन्तोषी नर धन्य, गेह जिसके नारी धवाऽऽराधिका ।।70।।

Do not deem loreless, wealthless persons vain,

Provided Çiv' and Çakti drive their brain.

The pious life, though poor, is not a waste.

The men are fortunate whose wives are chaste.7

## सिद्धि:स्वात्म-तपो-भवा

दारिद्र्यं न कदापि सज्जन-तप:संवर्धने बाधते
दुष्टानां न तथाविधं धनबलैर्व्यक्तित्वमुत्पद्यते ।
श्रीविद्याऽऽदिक-देवता-जप-मनूनद्यापि नित्यं जपन्
सिद्धिं साधक आत्मजां हि लभते, वाणी प्रमाणं मम ॥71॥

ना व्याघात दरिद्रता, सुजन को, होती तपोवृद्धि में,
पैसे से बनता नहीं कुजन का व्यक्तित्व वैसा यहाँ ।
श्रीविद्यादिक मन्त्र के जप किये से आज भी लोक में
पाता साधक सिद्धि आत्मबल से, साक्षी बना मै खड़ा ॥71॥

Here penance couldn't be checked by poverty.
**Wealth couldn't shape so bad men;'s pers:nality.**
With Çrī-Vidyādik'-mantras, e'en today,
Adepts secure success from self, I say. 71.

कीर्त्यन्ते कलुषात्मनां कृतिकथास्तीर्थेषु तीर्थारिभिः
श्रूयन्ते हि कुतर्क-कर्कश-गिरो वाग्देवता-द्वेषिणाम् ।
दृश्यन्ते दुरितात्मनां दलदला आन्दोलनाऽऽन्दोलिता
दुर्गे! दुःखद-दुष्ट-दर्प-दलनी शक्तिः सतां सूयताम् ॥72॥

तीर्थों में खल-वृन्द की कृति-कथा तीर्थाऽरि हैं बाँचते,
वाणी-शत्रु कुतर्क-कर्कश-गिरा उच्चारते ठाठ से ।
पापी लोग उभाड़ते फिर रहे आन्दोलनों के लिये,
दुर्गे! दुःखद-दुष्ट-दर्प-दलने की शक्ति दो साधु को ॥72॥

**At shrines, rogues tell the sinners` tales absurd.**
**Wrong pleas of pseudo-scholars there are heard.**
**The gangs of bandits raise insurgent waves.**
**Durgā! please make saints pound the pride of knaves. 72**

## कं पृष्ट्वा पातकं कृतम् ?

आधि-व्याधि-विमर्दिता विचलिता दुर्भाग्य-दग्धा जनाः
क्रोधाऽऽवेश-निवेशितैर्निगदनैर्निन्दन्ति नारायणम् ।
कष्टेऽनर्गलभाषकान्प्रकुपितान्प्रष्टुं प्रवृत्तोऽस्म्यहं
पृष्ट्वा किं परमेश्वरं कृतमिदं व्याघातकं पातकम् ? ॥73॥

दुःखों से उद्विग्न लोग अपने दुर्भाग्य से दग्ध हो,
क्रोधावेश-निवेश से उकसते विश्वेश को कोसते ।
कष्टों में गल फाड़ते उन जनों से पूछने मैं चला-
पूछा था प्रभु से, स्वपाप करने को, आपने क्या कभी? ॥73॥

The men, tired of ill fates, diseases dire,
Abusing God, against Him, raise their ire.
I ask the reckless, reinless raillers, pinned
If they had leave of God, before they sinned. 73.

## चण्डीं भजत, पण्डिताः!

युद्धं धर्म-विरुद्धमिद्धमधुना धर्म-द्विषां सज्जनैः
सर्वं शासन-सम्मतं चलति तज्जाति-प्रथोन्मूलनम् ।
सर्वे सन्ति च राजनीतिक-दलास्तत्रैकमत्ये स्थिता -
श्चण्डी दण्डन-पण्डितां भजत रे! मन्त्रोद्भटाः पण्डिताः! ॥74॥

चालू धर्म-विरुद्ध युद्ध अब तो पापिष्ठ का साधु से,
सारा शासन-तन्त्र ही चल पड़ा है जातियाँ तोड़ने ।
सारे ही, इस काम को, दल यहाँ पाये गये एक हैं,
हेला दो तुम चण्डिका-चरण को मन्त्रोद्भटो! पण्डितो! ॥74॥

A war of saints and sinners goes on fast.
The State is out to break the faith in caste.
Politic parties, for that, congregate.
Call Caṇḍī for help, paṇḍit'-mystics, great. 74.

## वन्दे-त्रिपुरसुन्दरीम्

कृता हिंसा हेयाः कियदपकृतीरप्यनुगताः

कृतं दौर्जन्येन व्यभिचरण-लीला-व्यतिकरम् ।

अघौघानामोघं कथमपि समुद्धूतमधुना

तिरस्कुर्वत्यम्ब! प्रकटमुपदेशं दिश मम ।।75।।

भले, हिंसा की हो, अपकृति, भले ही, बहुत सी,

कभी आया होऊँ, व्यभिचरण की भी चपट में ।

अघों की कैसी भी, कृति बन पड़ी हों, अब उन्हें

भुला दे री माता, खुल पथ बताती रह मुझे ।।75।।

Some violences, sins, I must have done,

And faithlessness, I, sometime, must have spun.

Whatever blemishes, whate'er their source,

Excuse me, Goddess ! be my guiding force. 75.

तुलस्या संपृक्तं कुसुम-सहितं चन्दन-चिते
धृतं सद्य:पूर्णे हरिचरणयोस्ताम्र-पुटके ।
तृणागारे ग्रीष्मे भजति कुल आरोग्यमनिशं
वयं विष्णोः पूजा-सलिलममृतं मन्महे इमे ॥76॥

हरिश्री के आगे, स-सुम-तुलसी-चन्दन-चिते
अभी माँजे, धोये, प्रखर निखरे ताम्र-पुट में ।
निदाघी वेला में, तृण-गृह-बसे स्वस्थ कुल में,
लगा है पूजा का, जल अमृत के तुल्य हमको ॥76

Bedecked with sandal, flowers and Tul'sī blad
Just filled in copper pots, in straw-hut-shades
In summer, with the healthy kins, secure,
God-worship-waters turn elixir pure. 76.

प्रकीर्णाः प्रासादा विशद-बहुभूमा दिशि दिशि
न कार्पण्यं पुंसां तदधिवसनेनैव गलति ।
उदारा जायन्ते प्रकृति-कृतिनश्चापि विपिने
सदा भव्याऽऽभोगो भवति विनियोगो न महसाम् ॥77॥

बने हैं शोभा के, महल धरती के तल बड़े
वहाँ सोने से ही, बस, न मिट जाती कृपणता ।
गुणी पाये जाते, लघु-सदन में भी विपिन में,
नहीं सम्पत्सत्ता, जन-सुगुणवत्ता-कर सदा ॥77॥

The world abounds in mansions, with fair fence,
The greed is not marred by there residence.
Good souls could be found in a forest den.
The stately structures can't make stately men.77.

यदाऽऽलोकाल्लोकश्चकितचकित: सम्भवति ते
गिरावुत्पद्यन्ते नगर-रमणीया हि मणय: ।
दरिद्राणां किं वा किमपि महरस्त्येव महतां
सदा तेजस्तेजो भवति विजने वा जनपदे ।।78।।

चकाचौंधों से जो चकित कर देतीं मनुज को,
पहाडों में जन्मीं नगर-निधि वे श्रेष्ठ मणियाँ ।
महात्मा नि:स्वों की कुछ अलग ही भाव-गरिमा,
रहेगी भा तो भा, विजन वन हो वा नगर हो ॥78॥

Whose lustres please the world, with charming shocks,
The splendid gems are born in mountain-rocks.
The great, though poor, possess some bearings high,
Lights are lights if, in woods or towns, they lie. 78.

प्रभाता प्राच्यादावुषसि रविरागं श्रितवती
प्रतीचीं दूरस्थाऽप्युपदिशति शोभाऽर्जनमिव ।
किमाश्चर्यं वीक्ष्य स्मर-शर-जित-स्त्री-सुरचनां
युवत्यः सीमन्ते ददति यदि सिन्दूर-पदवीम् ? ।।79।।

प्रतीची को प्राची, उदित सविता के रँग-रँगी,
सिखाती सी दूरस्थित सुरख शृंगार करना ।
अचम्भा क्या ? शोभा स्मर-जित-नरी की निरखती,
कचों में बालाएँ ललक यदि सिन्दूर भरतीं ।।79।।

The east, at dawn, presenting the red view,
Instructs the west, as if to change its hue.
No wonder, watching sensual ladies, girls
Are led to put red lead, in hair-line-curls. 79.

मुधा मुग्धैरुक्तं युवति-वदनं पद्म-सदृशं
तथा पुंसां प्रीतिं कमल-शत-शोभा वहति किम् ?
कराऽग्राऽग्र-क्षुण्णं भवति दलितं पङ्कज-दलं
मुखं स्वास्थ्यं याति प्रखर-दशनैश्चर्वितमपि ॥80॥

कहा है मूर्खों ने, युवति-मुख अम्भोज-सम है,
न देते लोगों को वह सुख न सौ-सौ कमल भी ।
नखों नौंचा जाता, कुचल गलता अब्ज-दल तो
रदों से काटा भी मुख फिर वही रंग भरता ॥80॥

**With lotus, dunces liken ladies` face,**
**could hundreds of those flowers have that face-grace?**
***The lotus-blades are killed with finger-tips,***
**Though crushed with teeth, revive the ladies` lips.80.**

कटिं तिर्यक्कृत्वा तदुपरि निधायोन्नतकरं
पुनःपीनोरस्के! सुपरिसर पादोम्भित-यतिः ।
शृणोति व्याहारानिति परिषदामस्त-गरिमा
वराकी नृत्यन्ती विपणि-वनिता नो कुलवधूः ॥81॥

'अहा! हा! थोड़ी सी कमर तिरछी और कर ले,
उठी छाती वाली ! कटि पर उठा हाथ धरले ।
छमाछं पैरों से ठुमक चल' ये बोल सुनती
नचे यूँ बेचारी, विपणि-वनिता, ना कुलवधू ॥81॥

"A bit more bend and raise your hand, waist there,
With high-breast-heats, accomplished beats, dance here."
A harlot hails such howlings of the crowd.
'Tis not so with the honoured house-wives, proud. 81.

महोत्कण्ठामूलं कलितमनुकूलं विषयिणां
क्षणाधारं यूनामनुदितवसूनामपि सताम् ।
प्रकृत्या यत्पुंसः प्रभवति विकर्तुं वयसि य-
न्न जाने कुत्रेदं युवति-जन-रूपं व्रजति हा! ॥82॥

भरे जो उत्कण्ठा, विषयि-नर में भोग-सुख की,
बना दे उत्साही, धन-रहित भी सत्तरुण को ।
करे जो ज्वानी में, विचलित नरों को सुपथ से,
न जाने खो जाती, युवति-छवि-सत्ता वह कहाँ! ॥82॥

Which, in enjoyers, heightens eagerness,
And hopes, in young men, far from wealth-access,
Which pushes men astray , at their youth-rise,
I know not where the womens` beauty flies! 82

वरा तत्त्वज्ञानां प्रखर-पद-तिक्ता मति-सुधा
न चान्येषामिष्टः श्रवण-मधुरो वर्ण-विसरः ।
प्रशस्तिं शाठ्योत्थां रुचि-कर-कलापैरपि कृतां
ज्वरोन्मुक्तौ मिथ्यां क्षुधमिव न सम्भावय, सखे! ॥83॥

भली तत्त्वज्ञों की प्रखर कड़वी भी मति-सुधा,
न अच्छी औरों की श्रुति-मधुर भी शब्द-रचना ।
प्रशंसा हो चाहे रुचिर पर जो शाठ्यज उसे
क्षुधा मानो मिथ्या, ज्वर उतरने के समय की ॥83॥

The caustic comments that the experts raise,
Are more important than the other's praise.
Don't entertain applause by cheats alone,
Like appetite false, after fever gone. 83.

धनाढ्यान्विद्याढ्यान्बहुविध-सुखाढ्यान्सुकृतिन:
सनाढ्यान्रूपाढ्यान्गुणि-जन-कुलाढ्यानपि कवीन् ।
विनिन्दन्तत्सर्वं गुणमभिलषन्नात्मनि जन:
करोति व्याहारै: पिहित-लघुताया विवरणम् ॥84॥

धनाढ्यों, विद्याढ्यों, बहुविध-सुखाढ्यों, सुकृतियों,
सनाढ्यों, शोभाढ्यों, गुणि-कवि-कुलाढ्याऽभिजन को ।
बुराई देते भी, उन सब सुखों को ललकते,
दिखाते वाणी से मनुज निज ओछापन ढका ॥84॥

The men, abusing rich men, scholars bright,
Saints, virtuous poets, handsome persons right,
Though craving all that, yield their state of wills,
Their jealous words betray their hidden ills. 84.

## धिक् समीक्षकमानिन:

निरादर्शं काव्यं कृतक-विधि-वाक्यैः परिवद-
न्नुताऽऽदर्शोपेतं रचनमपि रोषाद्विकथयन् ।
नर! त्वं को व्यर्थं नवल-नवलाऽऽकल्पित-मिषैः
कवीनां साम्राज्यं कथमसि विकर्तुं कृतमतिः? ॥85॥

कलार्थी काव्यों को कृतक-विधि से निन्दित बता,
भले आदर्शों की कलित-कृति को भी कुतरता,
अरे! तू क्या है रे! नर! नित-नये-कल्पन-मिषों,
पड़ा पीछे क्यों तू, विकृत, कवि-साम्राज्य, करने? ॥85॥

Deriding aimless works, with dicta false,
condemning aimful forms of art, with galls,
Who are you, man, with new excuses, vain ?
Why are you out to stain the poets` reign ? 85.

समर्था वाशक्ता ददति जगतां वक्षसि पदं
न कीर्त्यै कृत्यं तद्द्विविधमपि दोषास्पदमिदम् ।
मुदा श्रावं श्रावं गदितमविदाऽनर्गलमतो
बुधानां बालानामपि च परिभावञ्जहि सखे! ॥86॥

लगाते, छाती में, सबल, अबली, लात, जग की,
किसी से, दोनों में, कुछ न कहना ही उचित है।
सुने जाओ, धीरे, मुदित मन से बोल उनके,
बुधों को, बच्चों को झिड़क मत देना तुम, सखे! ॥86॥

The powerful or the powerless could kick all.
In any case, you need not show your gall.
You should, fain, bear their reinless railling, dirts,
But ne'er condemn, friend, children and experts. 86.

विधाय स्वाख्यानं प्रकट-महिमानं श्रितवता-
मपि स्फीता कीर्त्तिर्नियतमपकीर्त्तित्वमयते ।
स्वयम्भाषे लोकः कलयति कलङ्कं कमपि त-
द्भवत्यात्मश्लाघा जगति परिवादस्य पदवी ।।87।।

यशस्वी स्वार्हा को निज मुख बखाने यदि कहीं,
प्रशंसा निन्दा में, झट, बदल जाती, मनुज की ।
स्वशंसी लोगों में जन समझ लेते कुछ कमी,
रहे आत्मश्लाघा कुयश करवाती भुवन में ।।87।।

**If one describes one`s virtues, leaving shame,**
**One`s fame, abruptly, takes the shape of blame.**
**Men, in self-praisers, doubtless deem some spot,**
**So self-applause becomes the cause of blot. 87.**

यथा हावो हेला, रति-जलधि-वेला-विलसतां
सुखं सद्यः कान्ता-कुशल-पद-बन्धादि कुरुते ।
तथा पुंसां काव्ये कृत-मति-विभाव्ये कृति-भवं
महत्त्वं व्यङ्ग्यं चेत्तदिह महिमानं वितनुते ॥88॥

यथा स्त्री के हेला, रति-जलधि-वेला-विलसते
नरों को, नारी के कुशल-पद-बन्धादि सुख दें ।
तथा श्लाघा पक्की, कृतमति-जँचे श्रेष्ठ कवि के
किये काव्यों में जो झलक महिमा की मिल सके ॥88॥

As ladies` gestures, stirring sexual sense,
And playful shows are sure to sate their fans,
sure is the fame of artists, poets wise,
If, in their works, high implications rise. 88.

महत्तामात्मीयां सदसि सहसोक्त्वा स्ववदना -
　　द्गुरूणां साम्मुख्यं परिहरति योऽस्तव्यतिकरः ।
स कृत्वा धृष्टत्वं प्रथम-मिलने केलि-समये
　　पुनः कान्तालोके चकित-मति-कान्ता-जन इव ॥89॥

सभा में स्वार्हत्ता स्वमुख निकली देख, गुरु से
　　छुपाता आँखें जो सिकुड़ सकुचाता वह कृती ।
किये बैठी क्या-क्या, प्रथम मिलने के समय ही,
　　पिया आगे आती चकित चकराती युवति-सा ॥89॥

The authors, guilty of abrupt self-praise,
For shame, avoiding their preceptors gaze,
Resemble brides that, in their first embrace,
Exposing full, their husbands, dare not face. 89

 

तनौ स्थित्वा स्थित्वा चलति पुलकानां कुलमहो!
यश: श्रुत्वा शीर्षं नमति च नवोढा-जन इव।
मनस्येवं भूयो भवति भविता किं परमत:
प्रशंसा पात्राणामचिर-परिणीता-पतिरिव ।।90।।

उठे, हाँ, अंगों में, कुछ गुदगुदी सी, उमँग सी,
नई व्याही का सा झुक-झुक पड़े सीस सुन के।
घटेगा आगे क्या यह उभरता भाव मन में,
प्रशंसा पात्रों की अचिर-परिणीता-पति बने ।।90।।

***Confronting praise, men, just like brides, are coy,***
**Their body has a surge of thrills of joy.**
**" What would be next ", such fears are, in them, raised.**
**Thus praise becomes the husband of the praised. 90.**

अध: कृत्यात्मानं विनय-वचसा ग्रन्थरचने
प्रशंसा-साम्मुख्ये सुरति-मतिमन्तर्वहति या ।
न नो नो कूजन्ती मनसि महिते चापि गमने
न सा विद्वन्माला ललित-ललनेवाचरति किम्? ॥91॥

स्वयं को नीचे ला, विनय-भर से, ग्रन्थ रच के,
प्रशंसा पा होती चुप, मुदित होती हृदय में ।
सुनाती ना, ना, ना, मन ललकती भी गमन को,
न क्या विद्वन्माला, ललित ललना सी लग रही? ॥91॥

Presented with praise for composing books,
Full of self-slighting words, but wistful looks,
Repeating 'no' by tongue yet 'yes' by heart,
Don't authors act like graceful ladies, smart?91.

समग्रं सौभाग्यं भवति सधवानां प्रियतमे
प्रतिज्ञाता प्रीतिस्तदनुचरणञ्चैव शरणम् ।
कथं सूक्ष्मे वस्तुन्यपि बत सतर्केण विधिना
मिथोऽनासक्तानां परिणय-विधिर्हा! व्यवसितः ॥92॥

सहारा नारी की, सुभग-विधि-संजात-पति से,
प्रतिज्ञा मैत्री की, अनुचरण ही सार जिसका ।
सभी बातों में हा ! अवहित बने स्वस्थ विधि ने
रचाया क्यों ऐसा परिणय जहाँ प्रीति न चले ॥92॥

The spouses` luck is the contracted love,
Its sincere observance is all above.
But why did God, the manager so stout,
The un-successful weddings, bring about ? 92.

 

## वैराग्यं बाधते सुतः

भुज-स्वल्पाऽऽरम्भैश्चपल-मुख-कल्पैःसविरुतं
समुत्कण्ठा-तल्पैरभिलषितमावेदितवतः ।
शिशोर्मात्रुत्सङ्गे· लुठित-हसितैः सस्मित-पितुः
सुत-प्रेमोत्सेधो विरति-विनिषेधो विजयते ।।93।।

चलाता नन्हें से कर, मुख बनाता, मचलता,
भरा उत्कण्ठा से शिशु कह रहा बात मन की ।
तभी माँ की गोदी, सुत-सुरति बोली बिगसते
पिता से- 'संन्यासी बन निकल जाना न घर से ।' ॥93।

With dancing tiny limbs, and facial whims,
Revealing glimpse of what wish in him swims,
In mother's lap, the son, when, laughs and plays,
Love bids glad dad to keep off hermitage. ·93.

महा-शिक्षा-स्थानेष्वधिगत-महा-शिक्षक-पदा-
न्महा-शिक्षा-नाम्ना तरुण-तरुणी-वञ्चनपरान् ।
महा-मूल्यं लब्ध्वा निज-गृह-महाऽध्यापन-रता-
न्महा-धन्यम्मन्यान्मनुज-महिषान्धर्षय सखे ! ॥94॥

महाशिक्षास्थानों पर झुक महा-शिक्षक बने,
बहाने शिक्षा के तरुण-तरुणी-वञ्चन-तने ।
बड़े पैसे लेके निज-गृह-महाऽध्यापन-सने,
चलो आत्मश्लाघी मनुज-महिषों को कुचलने ॥94॥

At colleges who pick Professors' posts,
Through private coaching cheat boys, girls, in hosts,
Conducting sales of education-shows,
Friend, kick those egotist black buffaloes. 94.

इयन्मात्रा निन्दा भवति कुजनानां धनवतां
तथापि प्रत्यक्षं मनुज-कुलमेतान्प्रणमति ।
विना दण्डं दुष्टो विलसति समाजे यदि तदा
कथं नान्यः कुर्यादनुचित-धनोपार्जन-मतिम्? ॥95॥

भले होती निन्दा बहुत, धन-धारी कुजन की,
मनुष्यों की टोली झुक-झुक करे मान उनका ।
खुले डोलें यों ही, खल खिलकते जो भय-बिना,
कहो क्यों ना सीखें इतर जन पैसा हड़पना ? ॥95॥

**Rich rogues are censured so much, all the same,**
**The pack of people greets them, turning tame.**
**They move so free and no one intervenes.**
**Why won't men learn to earn by sinful means?95.**

वरं वित्ताऽभावो भवतु परिभावो भुवि किया-
न्धनाऽधीनं मानं कथमपि विकत्थेत कुमतिः ।
दधाना उत्कोचैरनुचित-विधानाऽर्जितधनं
तितिक्षूणां तेजस्तुलयितुमशक्ता धनि-खलाः ॥96॥

धनाऽसत्ता चाहे प्रथित, जन में मान-हननी,
प्रतिष्ठा को मानें कुमति कितनी भी धन-जनी ।
बढा लें घूँसों से द्रविण कितना भी खल-धनी,
तितिक्षा-सेवी के सम न उनकी शक्ति बननी ॥96॥

**Let want of wealth be thought a great insult,**
**And let men boast of wealth-based-honour-cult.**
**Through black-mails, bribes, collecting wealth for show,**
**The rich rogues can't match patient persons` glow. 96.**

सदाचाराभासं विपदि ददतो दीनवचनैः
खलाः शक्ता भूत्वा विदधति विनाशं भुवि सताम् ।
दया नो कर्त्तव्या क्वचिदपि खले सङ्कटगते,
प्रमाणं शास्त्राणां प्रथित-कथनं पात्र-विषये ॥97॥

अभावों में पापी सुजन बन जाते, विनत हो,
सताते ही जाते, सबल बनते ही, सुजन को ।
खलों के दुःखों में, तनिक अनुकम्पा मत करो,
यही तो शास्त्रों का प्रथित मत है पात्र-विषयी ॥97॥

Rogues look, in pains, as if they have not taints
But gaining strength, they go on paining saints.
So don't save vile men when they face distress.
The Scriptures mean so by Man's properness. 97

निवेश: शक्तीनां भुवि भगवतेत्थं प्रकलितो
यथा शिष्टा सृष्टिश्चलति तुलितोद्योग-घटना ।
मदोन्मत्तो लोक: किमनु किमनिष्टं न घटये -
न्न मन्त्रज्ञ-क्रोधो दुरित-गति-रोधो भवति चेत् ॥98॥

विधाता ने बाँटा इस विधि बलों को कि जगती
व्यवस्था पा जाती जब डगमगाती विकल हो ।
घमण्डी क्या-क्या ना अनुचित किये जायँ जग में
रुषा मन्त्रज्ञों की खल-कुल-कशा-सी यदि न हो ॥98॥

The forms of powers, God has so well installed
That earth, at times, gets balanced and controlled.
The chain of crimes, the wicked would maintain,
If mystics` anger had not been their rein. 98.

प्रसूते सद्भोगान्विविध-सुख-योगान्भुवि धनं
परं सन्तस्तस्मै विदधति विगीतं न करणम् ।
अभावे द्रव्याणां तपति नियतं मानव-मनो
दरिद्रं नो कुर्यात्सुजनमिह धाता गृहपतिम् ।।99।।

सुभोगों की माता, विविध-सुख-दाता, धन यहाँ,
भले प्राणी तो भी न पथ गहते निन्द्य उसको ।
दरिद्रावस्था में मनुज-मन सन्तप्त रहता,
बनाये ना धाता अधन गृह-पाता सुजन को ॥99॥

Homes could be well maintained by dint of wealth,
Yet house-holders, good, could not live by stealth.
Confronting wants, their brains have hearvy strains.
**Good house-men shouldn't be short of money-gains. 99.**

सखे! विश्वासश्चेदनुपकृतलोकादुपकृते-
वृथा कः कस्मै किं कुरुत इति नो ते परिचयः।
सुहृद्भावोन्नत्यै विनत उपकारं कुरु जने
प्रसन्नो दुष्टोऽपि द्रवति सुजनानां क्व तु कथा ?॥100॥

भरोसा लाभों का, अनुपकृत से भी यदि तुझे,
किसे कोई क्यों दे कुछ, यह नहीं तू समझता ।
बढ़ाने मैत्री को विनत उपकारी रह बना,
सुखी हो, जाते है पिघल खल भी, क्या सुजन ना? ॥100॥

From un-obliged world, if you hope some gains,
You don't know who, without some cause, takes pains.
Help people pained politely, make friends` force,
Let saints alone, pleased rogues too melt, of course.100

अपीद्धं यद्राष्ट्रं कथमपि खल-प्रीणन-परं
परं राष्ट्रं प्रीत्या समुपचरतीव स्वकरणै : ।
सदाचाराभास: कृतक-महिमा नेतुरिति नो
क्षमस्तद्रक्षायै न विधिरनुकूलो यदि भवेत् ॥101॥

अधर्मी जो दुष्टोन्नति-परक हो राष्ट्र, अपने
सुखों के स्त्रोतों से, सफल करता शत्रु-सपने ।
उसे झूठा नेता, कृतक-महिमाभास भरता
बचाता ना, धाता यदि न उसका त्राण करता ॥101॥

If some rich nation goes on helping foes,
Appeasing scoundrels, with her means and vows,
Her leader's all concocted glory, pace
Can't save her if God doesn't extend His grace. 101.

पिपासा साक्षाणां नहि भवति यावत्प्रतिकृता
नरस्तावज्जेतुं वियदवनिमन्यच्च यतते ।
परं सोऽयं श्रीमान्समुपनत आत्मेन्द्रिय-सुखं
गतं स्मारं स्मारं रसयति निजं शान्त-करणः ॥102॥

पिपासा अक्षों की जब तक मिटे ना मनुज की
धरा-व्योमाद्यों को तब तक हिलाने निकलता ।
वही हो जाता है जब सधन आत्मेन्द्रिय-सुखी,
गतावस्थाओं के स्मरण-रस में ही विचरता ॥102॥

Unless the thirst of sense is satisfied,
Man thinks of moving earth and space so wide.
But when he has the mental peace and wealth,
He muses on the past, enjoying health. 102.

न यावत्कामिन्या:कुटिल-नयनाली-विचलितं
मनस्तावत्क्लीबं तदितरविधेऽर्थे विचरति ।
समुद्यत्सौन्दर्योल्लसित-महिलालोक-लुलितं
नपुँल्लिङ्गं · चेतोऽप्यभिसरति पुँल्लिङ्गवद्हो! ॥103॥

सकामा वामा की, जब तक पड़ें ना कनखियाँ,
बना क्लीबाचारी, इतर विषयों में विचरता ।
जवानी से फूली, ललित ललना को ललकता,
नृलिङ्गी· हो जाता, बरबस, नपुँल्लिङ्ग मन भी ॥103॥

Unless the leers of lasses land on mind,
This neuter, sticks to joys of other kind.
Before the youthful ladies` beauties, fine,
Man`s mind, though neuter, just turns masculine. 103.

न सा भव्या भङ्गी, ललितमधराणां विवरणं
न चौदार्यं स्त्रीणां, प्रणयिनि जनेऽप्युन्नत-गुणे ।
चिर-स्थैर्यं भुङ्क्ते प्रकृति-चपले चेतसि वृथा
कथा नित्य-प्रेम्णो, युवति-विषये वा नृ-विषये ॥104॥

स्त्रियों की मुद्रायें, ललित अधरों का बिगसना,
गुणी प्रेमी में भी, सुरुचि-कर औदार्य रखना ।
टिकाऊ ना होते, प्रकृति-चल-चित्तों रति-कथा
वृथा होती देखी, युवति-जन हो वा नर-युवा ॥104॥

The poses grand, the style of lips, express,
To lovely lovers, ladies` lavishness,
Do not last long . In fleeting fancies then,
'Tis vain to talk of constant maids or men. 104.

अहो! सा मे स्फूर्त्तिः, करण-पटुता बाल-सुलभा,
विचाराणामौग्र्यं, नवल-सबला साहस-कला ।
विधा सोत्साहानां, स्मृति-पथमुपायाति च यथा
तथा प्रज्ञा-स्थैर्य रचयति गभीरं मम मनः ॥105॥

अहा! वैसी फुर्ती, नवल-वय की अक्ष-पटुता,
विचारों की तेजी, सबल सरती साहस-कला ।
विधा उत्साहों की, स्मरण-गत होती जब कभी,
बना जाती मेरी, अचल मति, गम्भीर, मन को ॥105॥

When I recall my pleasant powers of sense,
The reckless thought, the fortitude intense,
The movement swift, the attitude so brave,
My ripened reason constitutes me grave. 105

सखे! संसारोऽयं परम-रमणीयः परमिह
प्रसङ्गः पीडानां परिणमति प्रीति-प्रतिहतौ ।
विरक्तिं को गच्छेदपरिमित-शोभे यदि भवे -
न्न शोकाशङ्कात्र प्रकट-करुणेऽप्युत्सववताम् ॥106॥

सखे! माना मैंने, अति-सरस संसार-सरणी,
विपद्व्यासङ्गों से, पर, बिगड़ जाता मन यहाँ ।
विरागी क्यों कोई, मनुज बनने को निकलता,
न शोकों की शंका, यदि सुलभ होती भुवन में? ॥106॥

The world is highly fascinating, friend !
But bad luck tends to rend our pleasures, planned.
Who would become a hermit, on this earth,
Had not the fear of pains been marring mirth ? 106.

## भेदः क्रूर-कृपालयोः

अकाण्डेष्वप्युग्रं प्रहरति यदेको धृत-बलः
प्रसङ्गेऽप्याघाताद्विरमति बलिष्ठो यदपरः ।
क्रमेण क्रूराणां सदय-हृदयानां विधिरसौ
जने शक्त्युत्कर्षो निशित-करपत्रं कर इव ॥107॥

बली जो थोडे भी अपकृत, बड़ी चोट करते,
बड़ी बातों में भी कुछ सहम जाते दमन से ।
क्रियायें ये क्रूरों, सदय-हृदयों की प्रकृति की,
बलों की सत्ता तो मनुज-कर में खड्ग-सम है ॥107॥

**Some powerfull men, without much cause, strike hard,**
**While others, hurt much more, their strokes, retard.**
**Harsh and kind men`s that`s the respective stand.**
**Might is, of course, in Man, a sword in hand. 107.**

असन्तः सन्तो वा, स्व-कृति-जनिताः सन्ति जनितो
नरो नो धर्मात्मा, भवति भुवि कस्यापि कथनैः ।
सहन्ते स्वेच्छातः, कलि-जनित-कष्टानि मुनयो
भयाद्वा लोभाद्वा, त्यजति निज-धर्मं न हि कृती ॥108॥

बुरे वा अच्छे वा, जन जनित होते जनन से,
न धर्मात्मा होता, नर-वर, किसी के कथन से ।
सहे जाते योगी, कलि-कलित पीडा स्व-मन से,
न छोड़े धर्मास्था, मुनि न भय वा लोभ-धन से ॥108॥

The karmas make men good or bad, by birth,
By asking, none acquires religious worth.
Saints bear the kali`s pains with their own lead.
For fear or greed, they don't dismiss their creed. 108.






असूया-ग्रस्त
प्रयास
सतां मन्त्र
विनाश

कुढ़ैला ल
प्रयासो
भलों के
खलों

To baffle
O! mysti
By good
The furi

असूया-ग्रस्तानां, सुजन-सुख-शान्त्यादि हरतां
प्रयास-ध्वंसार्थं, भजत बगलां रे! द्विजवराः!
सतां मन्त्र-प्रीता, प्रबल-खल-भीतार्त्ति-हरणी,
विनाशं शत्रूणां, दिशति निशिता सा भगवती ॥109॥

कुढ़ैला लोगों के, सुजन-सुख-शान्त्यादि हरते
प्रयासों को ब्रह्मन्! कुचल, बगला-ध्यान धरते ।
भलों के मन्त्रों से, रिपु-जनित-सन्ताप हरती ।
खलों के खेमों का, दमन करती है भगवती ॥109॥

To baffle jealous men, offending saints,
O! mystic! Dvij' ! to Bag'lā, put complaints.
By good man's mantr', arresting hostile rows,
The furious Goddess flouts the file of foes. 109.

## भगवत्ता सुखप्रदा

परैश्वर्याऽऽकारा, सुजन-वरणा धर्म-चरणा,

यशोधाराऽपारा, चरम-सुखद-श्री-प्रसरणा ।

सम-ज्ञानोपेता, विरति-परमेताश्रमपदा

सदा शर्वायत्ता, सुभग-भगवत्ता हि सुखदा ॥110॥

परैश्वर्याऽऽकारा, सुजन-कुल की धर्म-चरणी,

यशोधाराऽपारा चरम-कमला-शर्म-करणी ।

सभी ज्ञानों वाली, विरति-रति-चारम्य-चण है,

कपाली की पाली, सुभग-भगवत्ता शरण है ॥110॥

Full sovereignty; the best of virtue - force;

The finest fame; the greatest of wealth -source;

The mightiest Muse; full non-attachment broad,

I long for fortunes such, subject to God. 110.

यया हीनो हेयो, भवति परिहासं च लभते,
कृपा-पात्रं यस्याः परिचरति लोको नत-धिया ।
स्वतन्त्रोद्योगानां, दिशमुपदिशन्ती प्रसरतां
शिवानां श्रीव्यक्तिर्जगति भवशक्तिर्विजयते ॥111॥

हँसी हो, निन्दा भी, बहुत जिनसे हीन नर की,
सभी का हो जाता, प्रियतम, कृपा-पात्र जिसका ।
स्वतन्त्रोद्योगों की सरणि दिखलाती, पसरते
शिवों की श्री-माला उस भव-कला की विजय हो ॥111॥

Bereft of That, men, jeered at, grow absurd,
**And graced by That, men are esteemed, well served,**
Suggesting ways, inventing welfare cells,
With fortunes, That, Çiv'-Force, divine, excells. 111.

## सप्तश्लोकमयी सार्था प्रणीता काव्य-पुष्पिका ।

काले काले कृत-श्लोक-सूक्तिपञ्चामृतस्य तु ।
कृतोऽक्षय-तृतीयायां प्रकाशो मूलमात्रक: ॥1॥

अर्थ :- समय-समय पर रचे गये सूक्ति-पञ्चामृतम् के श्लोकों का मूलमात्र प्रकाशन अक्षय-तृतीया को किया गया था ॥1॥

सैषाऽक्षय-तृतीयाऽसीद्वैशाखे रविवासरे ।
शास्त्र-चन्द्र-नभो-नेत्र-निर्मिते वैक्रमाब्दके ॥2॥

अर्थ :- वह अक्षय-तृतीया, विक्रम-संवत् २०१६ के वैशाख में रविवार को पड़ी थी ॥2॥

सूक्ति-पञ्चामृतोत्पत्त्याश्चत्वारिंशत्समा अनु ।
कृता सम्पूर्ण-मिश्रेण परिवर्धन-पूर्णता ॥3॥

अर्थ :- सूक्ति-पञ्चामृत की रचना के चालीस वर्ष बाद सम्पूर्ण दत्त मिश्र ने इसमें कुछ और श्लोक जोड़कर इसे सम्पूर्ण बनाया ॥3॥

एकोत्तर-शत-श्लोकात्मकं मूल-कलेवरम् ।
एकादशोत्तर-शत-श्लोकं जातं तु साम्प्रतम् ।।4।।

अर्थ :- एक सौ एक श्लोकों का इसका मूल-कलेवर अब एक सौ ग्यारह श्लोकों का हो गया है ॥4॥

सूक्ति-पञ्चामृतं काव्यं मिश्र-सम्पूर्ण-निर्मितम् ।
यामनाखे बुधे व्यास-पूर्णिमायां प्रपूर्णितम् ।।5।।

अर्थ :- सम्पूर्ण दत्त मिश्र का बनाया हुआ यह सूक्तिपञ्चामृत काव्य विक्रम-संवत् २०५६ (यामनाखे) की व्यास-पूर्णिमा को बुधवार को सम्पूर्ण हुआ ।।5।।

त्रिगुणादधिकं जातं साऽनुवादं नवोदितम् ।
नवीनमेव मन्तव्यमस्मिन्वर्षे प्रकाशितम् ।।6।।

अर्थ :- अनुवादों के साथ, नये रूप में, तिगुने से भी अधिक बढ़ा, इस बर्ष में प्रकाशित, यह काव्य नवीन ही मानना चाहिये ।।6।।

एतद्धिन्द्याङ्गली-भाषा-द्वय-पद्येष्वनूदितम् ।
मया सम्पूर्ण-मिश्रेण प्रीणीयान्मम सुन्दरीम् ।।7।।

अर्थ :- मुझ सम्पूर्ण दत्त मिश्र के द्वारा हिन्दी और इंग्लिश के पद्यों में अनूदित यह (सूक्ति-पञ्चामृत नाम का काव्य) मेरी सुन्दरी को प्रसन्न करे ।।7।।



# ग्रन्थकार की बात

कविभिः क्रियते प्रायः सूक्त्यारोपः स्वकोक्तिषु ।
वरं भवेयुरेतासु सामान्या वाऽपि कूक्तयः ।। १ ।।

अर्थ : कवि लोग प्रायः अपनी उक्तियों को सूक्ति ही बताया करते हैं चाहे उनमें कितनी भी सामान्य उक्ति वा कूक्तियाँ भी भरी पड़ी हों ।। १ ।।

स्वमुखेन वरं कोऽपि घोषयेत्स्ववचोऽमृतम् ।
किन्तु सन्तो हि जानन्ति पीयूषं वा विषं हि तत् ।। २ ।।

अर्थ : अपने मुख से चाहे कोई अपने वचन को अमृत ही बताता रहे परन्तु यह तो सज्जन ही जानते है कि वह अमृत है वा विष है ।। २ ।।

पञ्चामृतरसारोपो मत्सूक्तिषु कृतो मया ।
तादृश्यः सन्ति ता नो वा प्रमाणं तत्र पण्डिताः ।। ३ ।।

अर्थ : मैंने भी अपनी उक्तियों को सूक्ति बताते हुए पञ्चामृत के समान बता दिया है । अब वे वैसी है भी वा नहीं यह तो पण्डित ही जानें ।।३ ।।

- कविपुण्डरीकः

**संम्पूर्ण-दत्त-मिश्र**

प्रतिष्ठा मे - 21-8-99

आचार्य प्रवर कविपुण्डरीक
श्री सम्पूर्ण दत्त मिश्र
उल्लासश्रीभवनम्, गोपालगढ़ भरतपुर (राजस्थान) ।

शेते यच्चित-पत्रे जलनिधि-तनया-जानिराश्वस्त-वृति
श्चञ्चत्काव्य-प्ररोहा विदधति रूचिरं शारदा-केलि-हर्म्यम् ।
वृन्ते वृन्ते निलीना नव-रस-विहगा भुञ्जते यत्फलानि
न्यग्रोधं सप्तशाखं तमिह सविनयं नौमि सम्पूर्णदत्तम् ।।

वाणी यद्भाव-चेष्टाऽनुकृति-सहचरी दिव्य-भावं प्रसूते
स्वाच्छन्द्यं यस्य सिद्धं स्तिमित-सहृदयं किञ्च वृत्त-प्रयोगे ।
सम्प्राप्यार्षी प्रतिष्ठां पुरहर-गृहिणी-पाणि-संस्पर्श-धन्यो
मान्यः सम्पूर्णदत्तो भरतपुरि सुखं शास्ति कालं कवीन्द्रः ।।

प्रणमति सविनयं मिश्रोऽभिराजराजेन्द्रः सर्वतन्त्रस्वतन्त्रं सारस्वत-व्योम भास्करं विद्वन्मतल्लिकामाचार्यप्रवरम् । समवाप्तं प्रागेव यथावसरं भवदीयं पत्रम् । भवच्चित्रं रूप-सौन्दर्य-निधान-भूतं पूर्वप्रेषितमेव मया प्रकाश्यते । सर्व कान्तमात्मीयं पश्यत्येव । तत्रादि पुनर्भवन्तः कान्ततमा मत्कृते ।

अन्यत्सर्व पराम्बाकृपया शोभनं वर्तते । भवदीयामनन्यसाधारणीं काव्यप्रतिभां भाषारहस्यपारङ्गततां वश्य-वाणी-चक्रवर्तिताञ्च दर्श दर्श परं विस्मयमुपैमि । भवत्सदृशं नाऽन्यं पश्यामि संस्कृतजगति । मयि वत्सला भवन्त इत्यनुभूयैव कृतार्थतायाः पूरां कोटिमधिरूढोऽस्मि ।

--------- --------- ---------

क्षन्तव्योऽस्मि प्रमादार्थम् । भवन्तः पितृकल्पाः ।
भवद्वात्सल्यगर्विततयैव कदाचिदसाम्प्रतं विधीयते । सप्रणामम् -

*मिश्रः अभिराजराजेन्द्रः*
**Dr. Ranjendra Mishra**
**Professor & Head Sans. Deptt.**
**H.P. University, Shimla-5**
**Dean, Faculty of Languages**
☎ (0177) 231407

## ऋतूल्लासः

स्वल्पाकारमपि प्रसाद-मधुरं काव्यं सुधा-वर्षणं
निर्मायैतदनाविलं खलु ऋतूल्लासाऽभिधानं कविः ।
विश्वेषां कविताकृत्वां सुमनसां चेतांसि सम्प्रीणयन्
लब्ध्वाऽयं कविपुण्डरीक-पदवीं जीयात्सतां संसदि ।।

*- स्वामी अमृतवाग्भवाचार्यः*

## सूक्तिपञ्चामृतम्

श्री-सम्पूर्ण-विनिर्मितं सुमधुरं श्री-सूक्तिपञ्चामृतं
काव्यं नव्य-रसाऽनुकूल-रचनाऽलङ्कार-रीत्युज्ज्वलम् ।
दृष्टा कर्णपुटैर्निपाय च वयं मग्नाः प्रमोदार्णव
ईदृग्ग्रन्थ-ललाम-निर्मित-कृते वर्धपनं ब्रूमहे ।।

*- स्वामी अमृतवाग्भवाचार्यः*

## रास-नायक-नायिकम्

कविश्रीपुण्डरीकस्य रचना वचनाभिगा ।
समुल्लसित-सौरभ्या सभ्यानानन्दयिष्यति ।।

*प्रो० बटुकनाथ शास्त्री खिस्ते*

## श्री रेवेश्वर-रञ्जना

राजस्थाने भरपुरि यः श्रील-सम्पूर्णदत्तो
मानोत्तुङ्गः कवि-कुल-मणिः पुण्डरीकोज्जवलश्रीः ।
रेवानाथ-स्तुति-सुरभिते काव्य-बन्धे तदीये ।
वाचं प्रास्ताविक-पद-मयीं स्वैरमुन्मीलयामि ।।

-राष्ट्रपति-सम्मानित महामहोपाध्याय
शास्त्रचूडामणि प्रो० बटुकनाथ शास्त्री खिस्ते
*अध्यक्ष : काशी पण्डितसभा, वाराणसी*